# चतुर्वर्गचिन्तामणिः
## हेमाद्रिविरचितः

# Caturvargacintāmani
## of Hemādri

VOLUME — II (Part-II)

CHAUKHAMBHA SANSKRIT SANSTHAN
VARANASI, INDIA

THE
KASHI SANSKRIT SERIES
235
*****

# CATURVARGACINTĀMAṆI

OF

## ŚRĪ HEMĀDRI

**Volume II**

VRATAKHAṆḌA

**PART II**

*EDITED BY*
PAṆḌITA BHARATACANDRA ŚIROMAṆI
PAṆḌITA YAJÑEŚVARA SMṚTIRATNA
and
PAṆḌITA KĀMĀKHYĀNĀTHA TARKAVĀGĪŚA

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 1139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI ( INDIA )

॥ श्रीः ॥

काशी संस्कृत ग्रन्थमाला
२३५

# चतुर्वर्गचिन्तामणिः

श्रीहेमाद्रिविरचितः

तत्र

## व्रतखण्डनाम्नो

## द्वितीयखण्डस्य

द्वितीयो भागः

श्रीभरतचन्द्रशिरोमणिना
श्रीयज्ञेश्वरस्मृतिरत्नेन
श्रीकामाख्यानाथतर्कवागीशेन
च
परिशोधितः

चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० ११३९
जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन
वाराणसी ( भारत )

# सूचीपत्रम् ।

———— ००० ————

## सूचीपत्रम् ।

# ग्रन्थानां वचनसंख्या।

# अथ सप्तमोऽध्यायः।

———000———

## अथ त्रयोदशीव्रतानि।

धर्मादपेतं न कदाचिदेव यदीयवाचो विषयत्वमेति।
स एव हेमाद्रिरनुक्रमेण त्रयोदशीषु व्रतवृन्दमाह॥

युधिष्ठिर उवाच।

भगवन् भूतभव्येश संसारार्णवतारक।
व्रतं कथय किञ्चिन्मे रूपसौभाग्यदायकं॥
अनङ्गः प्रीणितो येन फलं यच्छति केशव।
आत्मवद्रूपसौभाग्यं तन्मे विस्तरतो वद॥

कृष्ण उवाच।

अनङ्गः श्रूयते देवः शूलपाणिः पिनाकभृत्।
तस्मिन् सम्पूजिते* पार्थ किन्नाप्नोति नरोभुवि॥
तेन ते कथयिष्यामि शूलपाणिव्रतेष्विदम्।
यन्न कस्यचिदाख्यातं व्रतानामुत्तमं व्रतं॥
चीर्त्त्वा भक्त्या नरोमर्त्त्यै यद्यदिच्छति पाण्डव।
तत्तदाप्नोत्यसन्दिग्धमनङ्गाख्यां त्रयोदशीम्॥
किं व्रतैर्व्वहुभिः पार्थ उन्नमात्रफलप्रदैः।
त्रयोदशी त्वियं पुण्या सर्व्वव्रतफलप्रदा॥

---

* तस्मिंस्तु पूजित इति पुस्तकान्तरे पाठः।

तस्मात् कार्य्या प्रयत्नेन बहुपुण्यमभीप्सता।
त्रयोदशीह्यनङ्गाख्या सर्व्वाऽघौघ* विनाशनी॥
सर्व्वदुष्टोपशमनी सर्व्वमङ्गलदायिनी।
अतुल्यसुखसौभाग्यरूपलावण्यदायिनी॥
पुरा दग्धेन कामेन त्रिनेत्रनयनाग्निना।
भस्मीभूतेन लोकेऽस्मिन् सङ्कल्पस्थेन पाण्डव।
अनङ्गेन कृताह्येषा तेनानङ्गत्रयोदशी॥
अपरं श्रूयते यस्यां पुराणेनेतिविश्रुतम्।
नाम निर्व्वचनं पार्थ कथयामि शृणुष्व तत्॥
अनङ्गो भगवान् शम्भुस्तेजो†मूर्त्तिरगोचरः।
सएव देवोयेनास्यां तेनानङ्गत्रयोदशी॥
प्रसिद्धा समनुप्राप्ता नित्या सर्व्वफलप्रदा।
मार्गशीर्षेऽमले पक्षे त्रयोदश्यां समाहितः॥
स्नान नद्यां तड़ागे वा गृहे वा कूपतोऽपि वा।
कृत्वाभ्यर्च्य महादेवं विधानाच्छशिभूषणं॥
लिङ्ग स्वयम्भवं भूतमभावे यत्प्रतिष्ठितं।
तदनङ्गमितिप्रोक्तं पूजयेद्भक्तितोव्रती॥
दधि,दुग्ध,घृत,क्षौद्र, शर्करादामृतैः शुभैः।
स्थाप्य‡ एवामृतैः पश्चात्स्नापयेद्गन्धवारिणा॥
धूपदीपादिनैवेद्यैः पुष्पैस्तत्कालसम्भवैः।

---

* सर्व्वाघौघेति पुस्तकान्तरे पाठः।

† विभु रिति पुस्तकान्तरे पाठः।

‡ स्नाप्येति पुस्तकान्तरे पाठः।

फलैर्नानाविधैर्भक्ष्यैर्गीतवादित्रनिस्वनैः॥
श्रुतनामान्यथोच्चार्य्य होमःकार्य्यस्तिलाक्षतैः।
अश्वत्थ,जाति,मारङ्ग, पायसैर्म्मधुना पिवेत्॥
अश्वत्थादि क्रमात् काष्ठपुष्पफलनैवेद्यप्राशनानि॥
एवमुत्तरेष्वपि मासेषु
अनङ्गं पूजयेदादौ मधुमत्यासमन्वितं।
अनङ्गनाम्ना संपूज्य मधु प्राश्य स्वपेन्निशि॥
मधुप्राशनयोगेन जायते मधुरध्वनिः।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति भक्तिमान्॥
पुष्पैरुदुम्बरैर्व्वीर शुभदाड़िममोदकैः।
चन्दनेन च योगीशं मदयन्त्या युतं यजेत्॥
स्नाप्य क्षीरादिभिः पार्थं पूजयित्वा विधानतः।
योगेश्वरेति संस्पृश्य चन्दनं प्राशयेन्निशि॥
सौम्यः शीतः सुगन्धश्च चन्दनप्राशनाद्भवेत्।
राजसूयस्य यज्ञस्य तद्भक्तः फलमाप्नुयात्॥
माघे न्यग्रोधसत्कन्द मातुलिङ्ग सुमालिकैः।
सुमालिकं सोमलकं मुक्ता भौतिश्च योगीशं मदयन्त्या संहितं यजेत्।
माघेश्वरेति संस्मृत्य प्राशयेन्मौक्तिकोदकं॥
प्राशनस्य प्रभावेन निर्मला धीः प्रजायते।
रूपाढ्यश्च वपुःस्त्रीणां मनोनयननन्दनं॥
मुक्तापूर्णोपमे नेत्रे पद्मपत्रायते शुचिः।
सौम्यः शान्तः सुगन्धश्च चन्दनप्राशनाद्भवेत्॥

बहुशर्म्मोऽष्टहस्तस्य प्राप्नोत्यविकलं फलं।
फाल्गुने वदरीकैश्च गौरजोवीरणोदकैः॥
कक्कोलेनच वीरेशं सशीतं निशि पूजयेत्।
वीरनाम जपेद्रात्रौ कक्कोलं प्राशयेन्निशि॥
तेनास्य सुरभिर्गन्धो जायते कायवक्त्रयोः।
तथा गुणगणावासो द्रुतकाञ्चनसन्निभः॥
गोमेधस्य फलं प्राप्य शक्रलोके महीयते।
चैत्रे करञ्ज,दमन,द्राक्षा,वड़क,शीतलैः॥
शीतलः कर्पूरः।
देवेशं रूपनामानं यजेत् सुभगया सह।
पूर्व्वोक्तविधिना पार्थ कर्पूरं प्राशयेन्निशि॥
कर्पूरवान् प्रियालोके गन्धगौरवसंयुतः।
चन्द्रवत्सर्व्वलोकानां लोचनाह्लादकारकः॥
जायते स नरः पार्थ यः करोतीह भक्तिमान्।
नरमेधफलावाप्तिर्जायते नात्र संशयः॥
वैशाखे सहकारार्कपुष्पान्नफलसक्तुभिः।
जातीफलैर्महारूपमिन्द्राण्या सहितं यजेत्॥
प्राशयेद्रात्रिसमये जातीफलमनुत्तमं।
सफलास्तस्य सर्वाशा भवन्ति भुवि भारत॥
गोसहस्रफलं प्राप्य रुद्रलोके महीयते।
ज्यैष्ठे जम्बूविल्वपत्रैः श्रीफलैः पूपकैस्तथा॥
लवङ्गनाथं संपूज्य प्रद्युम्नं ललितान्वितम्।
लवङ्गं प्राशयेद्रात्रौ लावण्यं तेनचाप्नुयात्॥

वाजपेयफलं लब्ध्वा मोदते दिवि भारत ॥
आषाढेऽपामार्गमीप नालिकेरकदम्बकैः।
तिलैश्चोमापतिं रात्रौ पूजयेच्च तिलोत्तमां।
उमापतिं जपन् प्राश्नः प्राशयेच्च तिलोदकं ॥
तिलोत्तमावद्भवत् रूपसम्पदनुत्तमा।
प्राप्नोति पुण्डरीकस्य फलं कुरुकुलोद्वह।
श्रावणे सुमनोभिर्भोऽजकदलीफलमण्डकैः ॥

सुमना जाती।

गन्धतोयैः शूलपाणिं शुक्लवासोन्वितं यजेत्।
गन्धोदकञ्च संप्राश्य स्वपेद्रात्रौ विमत्सरः ॥
सुगन्धः सर्व्वसौव्याख्यश्चिरायुश्चोपजायते।
अग्निष्टोमस्य यज्ञस्य तस्य स्यात् फलमुत्तमं ॥
भाद्रे पालाशचाम्पेयशर्कराज्य पुरैस्तथा।

आज्यपुरी घृतपूरः।

यजेतागुरुणा सद्योजातं गौर्य्यासमन्वितं ॥
अगुरुं प्राशयित्वा तु गुरुर्भवति भूतले।
तुलापुरुषदानस्य हैमस्य फलमश्नुते ॥
आश्विने चाप्यपामार्गकर्कन्धुगुडपूरकैः।
स्वर्णाम्भोभिः सुवर्णञ्च त्रिदशाधिपतिं यजेत् ॥
हेमोदकञ्च संप्राश्य हेमवर्णः प्रजायते।
नरमेधस्य यज्ञस्य फलं प्राप्नोति निश्चितं ॥
ऊर्जे कदम्बक द्रोणकुष्माण्ड लवणेन तुः।
फलैश्च विद्याधिपतिं यजेन्मदनया सह ॥

फलैरमृतफलाद्यैर्भक्ष्यलवणवान् श्रेयः।
लवणं प्राशयेत्तत्र श्रद्धया परयान्वितः।
रूपलावण्यसंयुक्तः प्राशनादस्य जायते॥
नैवेद्यानामप्यलाभेष्वविघ्नाय प्रकल्पयेत्।

इह प्रतिश्लोकं दन्तधावन कुसुम नैवेद्य प्राशनानां यथा क्रममभिहितानां तस्य तस्याभावे अयमनुकल्प उक्तः।

सर्व्वेषु पारणेष्वेव भोजयित्वा द्विजोत्तमान्।
सदक्षिणस्ततोऽश्नीयाद्बन्धुभिः सहितो वशी।
व्रतविघ्नो यदा तस्यामशक्तो सूतकेऽथवा॥
उपोष्य एवोपवास्य तदहः पारयेत् पुनः।
एवं सम्वत्सरस्यान्ते शक्त्या रत्नाद्यलङ्कृतं॥
उमामहेश्वरं हैममधिवास्य ततोनिशि।
पुष्पैर्धूपैस्तथागन्धैर्नैवेद्यैर्विविधैः फलैः॥
ततः प्रभातसमये कृतहोमवलिक्रियः।
वक्ष्यमाणमिदं सर्व्वं प्रदद्यात्तु द्विजातये॥
लिङ्गाकारमनङ्गञ्च सौवर्णं कारयेच्छिवं।
ताम्रपात्रेषु संस्थाप्य कलशोपरिविन्यसेत्॥
शुक्लवस्त्रेण संच्छाद्य पुष्पनैवेद्यपूजितं।
ब्राह्मणाय प्रदातव्यं शिवभक्ताय सुश्रुत॥
शक्तिमान् शयनं दद्यात्सवत्सां गां पयस्विनीं।
छत्रोपानत्प्रदानञ्च कलशा सोदकान्विताः॥
द्वादशात्र प्रकर्त्तव्याः स्रक्चन्दनविभूषिताः।
सितपक्वान्नसंछन्ना ब्राह्मणेभ्यो निवेदयेत्॥

देवस्यैव प्रदातव्याः कुम्भा द्वादशगन्दुकाः ।
वितानं पञ्चवर्णञ्च ध्वजकिङ्किणिनादिनम् ॥
घण्टाञ्च सुस्वनां भद्राञ्छ्वश्रीयाच्छिवमन्दिरे ।
तस्मिन्नेव दिने पार्थ सम्पोड्यात्मानमर्च्चयेत् ॥
देवदेवं त्रिशूलेशं पुष्पनैवेद्यदीपकैः ।
गीतवादित्रनृत्यादि प्रेक्षणैर्विविधैरपि ॥
दानान्यत्र प्रदेयानि स्ववित्तस्यानुसारतः ।
सूर्य्योपरागसदृशोयतःसद्दिवसो मतः ॥
भोजनञ्च यथा शक्त्या षड्रसं मधुरोत्तमम् ।
प्रदद्याच्छिवभक्तानां देयानि च विशेषतः ॥
अर्च्चितो नावमन्येत नक्षिपेन्नानृतं वदेत् ।
एवं तदुत्सवं कृत्वा शिवयज्ञमनुत्तमं ॥
ततः स्वयन्तु भुञ्जीयाद्भृत्यवर्गसमन्वितः ।
शान्ताचारकनिष्टस्तु हृदि देवं निवेश्य च ।
एवं निर्व्वर्त्य विधिवत्कृतकृत्यःपुमान् भवेत् ॥
नारी वा नृपशार्दूल कृत्वेतद्व्रतमुत्तमं ।
फलं त्वेतदवाप्नोति नात्र कार्य्या विचारणा ।
एवं कृत्वा नरः सम्यक् भक्तिभावेन भावितः ॥
मुच्यते सर्व्वपापोघैर्ब्रह्महत्यादिकैरपि ।
इह कीर्त्तिमवाप्य वै मृतः स्वर्गं महीयते ॥
पुण्यशेषादिहागत्य सार्व्वभौमो नृपो भवेत् ।
व्रतस्यास्य प्रभावेण मूर्त्तिमान् मदनोभवेत् ॥
सौभाग्यधनसौख्याढ्यःशान्तचित्तो जितेन्द्रियः ॥

पुत्रपौत्रैः सुसम्पूर्णैः जीवेच्च शरदां शतं।
शिवभक्तिपरो भूत्वा शिवैकगतमानसः॥
अन्तकाले शिवं स्मृत्वा शिवसायुज्यतां व्रजेत्।
कामेन याकिल पुरा समुपोषिता सीत्
शुभ्रान्तिथिं त्रिदशदेहमवाप्तिहेतोः।
तां प्राशनैरुदितनामयुतैरुपोष्य
दिव्यं प्रयाति परमं पदमिन्दुमौलेः॥

इति भविष्योत्तरोक्तं मनङ्गत्रयोदशीव्रतं।

---

चैत्र शुक्लत्रयोदश्यामनङ्गं तु पटे लिखेत्।
नीलदूर्वाङ्कुरश्याम हस्तमात्रं प्रमाणतः॥
रतिप्रीत्युभयोपेतं पौष्पसायकचापधृक्।
पटेषु सुस्थितः कार्य्यः सर्व्वैश्चाप्सरसां गणैः॥
नानापुष्पैस्तु संपूज्य वस्त्रनैवेद्यदीपकैः।
धूपैर्नानाविधैर्हृद्यैर्नानातोद्यरवेण तु॥
पुष्पमण्डपमध्ये तु रम्योद्याने तु पूजयेत्।
आचार्य्योविविधैर्भक्त्या पूजितव्यः प्रयत्नतः॥
वस्त्रहेमान्नपानैश्च यथा शक्त्या तु भक्तितः।
पुमान् कामत्वमाप्नोति सर्व्वस्यैव प्रियो भवेत्॥
सौभाग्यं प्राप्नुयान्नारी इह लोके परत्र च।
मासि मासि यजेद्वापि यथानुक्रमयोगतः॥
एकस्मिन् वा दिने वत्स वत्सरे वा समर्च्चयेत्।

मदनं चित्तभवनं मन्मथन्तु रतिप्रियं।
अनङ्गं चैव कन्दर्पं संपूज्य मकरध्वजम्॥
कुसुमायुधसंज्ञञ्च तथा पूज्य मनोभवं।
तथा विषमबाणञ्च द्वादशं मालतीप्रियं॥
मासि भाद्रपदे यत्नादनङ्गं पूजयेत्सदा।
इत्येतन्नियमेनैव कामव्रतं समाचरेत्॥

इति कालोत्तरोक्तमनङ्गव्रतम्।

———000———

युधिष्ठिर उवाच।

यमस्याराधनं ब्रूहि श्रीवत्सपुरुषोत्तमं।
यथा न गम्यते रौद्रन्नरकं नरकात्मकम्॥

कृष्ण उवाच।

द्वारवत्यां पुरे पार्थ स्नातोऽहं लवणाम्भसि।
दृष्टवान् मुनिमायान्तं मुद्गलं नामनामतः॥
प्रज्वलन्तमिवादित्यं तपसा द्योतितं वरं।
स प्रणम्याथ सत्कारैरिदं पृष्टोयुधिष्ठिर॥
यमादर्शननामेदं व्रतं जन्तुभयापहं।
कथयामास स मुनिर्मुद्गलो विस्मयान्वितः॥

मुद्गल उवाच।

वृत्तान्त कथयिष्यामि यद्दृष्टं स्वशरीरके।
अकस्माद्रोगरहितः पतितोस्मि धरातले॥
पश्यामि चण्डपुरुषैः समन्तादावृतं वपुः।

अङ्गुष्ठमात्रपुरुषो बलादाकृष्यते तु सः* ॥
बद्धा यमभटैर्गाढ़ं नीयते वेगवाह्निभि ।
तत्रात्मभार्या पश्यामि यमं पिङ्गललोचनं ॥
कृष्णावदातं रौद्रास्यं मृत्युव्याधिसमन्वितम् ।
वातपित्तकफाद्यैश्च मूर्त्तिमद्भिरुपासितं ॥
कामशोकज्वरच्छर्दिशोषानाहभगन्दरैः ।
राजयक्ष्मप्रमेहाद्यैर्नैत्ररोगैरनेकधा ॥
निजाङ्गन्तु व्रणै रौद्रैर्ज्वालागर्द्दभकादिभिः ।
रोगैर्ब्बहुविधैः कृष्णा नानारूपैर्भयावहैः ॥
मूर्त्तिमद्भिश्च संग्रामे नरकैर्घोरदर्शनैः ।
राक्षसैश्च पिशाचैश्च समन्तात्परिवारितः ॥
विचारकैर्व्वशिष्ठाद्यैश्चित्रगुप्तादिलेखकैः ।
आदित्यादिकदिक्पालैः कर्मसाक्षिभिरावृतः ॥
दूतैरौद्रमुखाद्यैश्च सिंहसर्पादिवाहनैः ।
पाशांकुशादिहस्तैश्च भ्रुकुटीकुटिलाननैः ॥
बृहत्कायैर्म्महाघोरैः पापिष्ठानां नियामकैः ।
असिपत्र वनाङ्गारचारगर्त्तास्त्रपूरकैः ॥
अस्थिभङ्गामिषच्छेदरुधिरस्रावकादिभिः ।
तत्रस्थो बृक्ततोभाति यमोनान्यो जनोऽपरः ॥
स प्राह किङ्करान् सर्वान् धर्म्मराजोरुषान्वितः ।
त्यज्यतां किं समानीतोयुष्माभिर्भ्रान्तमानसैः ॥
मुद्गलोनाम कुण्डिन्ये नगरे भीष्मकात्मजः ।

* वामदाकृष्यतेतुया इति पुस्तकान्तरे ।

क्षत्रियः समानीयतां क्षीणायुस्त्यज्यतां मुनिः ॥
इत्युक्तास्ते गतास्तस्मादायाताः पुनरेव ते ।
अचुर्यमभटाः प्राप्ता धर्म्मराजं सुविस्मयाः ॥
क्षीणायुस्तत्र चास्माभिर्न्न कश्चिल्लक्षितो गतैः ।
न जानीमो भ्रान्तचित्ताः क्षमस्व जगतांपते ॥

यमउवाच ।

प्रायेण ते न दृश्यन्ते पुरुषै र्धर्म्मकिङ्करैः* ।
कृता त्रयोदशी यैस्तु नरकार्त्तिविनाशनी ॥
उज्जयन्यां प्रयागे वा भैरवे वापि ये मृताः ।
तिलान्नगोहिरण्यादि दत्तं यैस्तु गवाह्निकं ॥

किङ्करा ऊचुः ।

कीदृशं तद्व्रतं स्वामिन्कुरुस नो भास्करात्मज ।
किं तत्र चैव† कर्त्तव्यं पुरुषार्थचतुष्टये ॥

यमउवाच ।

पूर्व्वाह्णे मार्गशीर्षादौ वर्षमेकं निरन्तरं ।
त्रयोदश्यां सौम्यदिने सूर्य्याङ्गारकवर्जिते ॥
मम नाम्ना द्विजानष्टौ पञ्च चैव समाह्वयेत् ।
पुराणवेदतत्त्वज्ञान् स्वाचारांस्तत्त्वदर्शनान् ॥
सूर्य्यैकशरणान् साधून् सर्वभूतहिते रतान् ।
शुचौ देशे शुभे पट्टे प्राङ्मुखानुपवेशयेत् ॥
अन्तर्व्वासोयुतान् भक्त्या यत्नेनाभ्यङ्गयेत तान् ।

---

* यमकिङ्करैरिति पुस्तकान्तरे पाठः ।

† ह्येवेति पुस्तकान्तरे पाठः ।

आरभ्य उत्तमाङ्गांस्तु तिलतैलेन मर्दयेत्॥
स्नापयेद्गन्धकाषायैः सुखोष्णेन च वारिणा।
पृथक् पृथक् स्नापयित्वा सर्व्वानेव द्विजोत्तमान्॥
सुखस्नातांस्तथाचान्तान् व्रती भक्तिपरायणः।
स्वयं सभृत्यः शुश्रूषां तेषां कुर्य्यात्समाहितः॥
प्राङ्मुखानुपविष्टांश्च त्रयोदश पृथक् पृथक्।
संस्थापयेच्चाभिमुखान् गुडपूपान् सुपूजितान्॥
सव्यञ्जनं सुपक्वान्नं भूयो भूयो निवेदयेत्।
यथासुखं यथातृप्ति यथाकाममयाचितं॥
देयं भावं समालक्ष्य इच्छद्भिः श्रेय आत्मनः।
शुचिर्भूत्वा तथाचात्र दद्यात्तिलतण्डुलैः॥
प्रस्थमात्रैरथैकैकं ताम्रपात्रसमन्वितैः।
सदक्षिणैश्च संछन्नैः जलकुम्भैः पवित्रकैः॥
चर्म्मप्रावरणैः श्रेष्ठैर्वस्त्रपुष्पैश्च दूतकाः।
मन्त्रेणानेन विप्रेन्द्रान् दद्यात्तान् पृथक् पृथक्॥
ब्राह्मणान् समरूपांस्तान् पंक्तिभेदेन कारयेत्।
यमःशनैश्चरी मृत्युर्दण्डहस्तो विनायकः॥
अभावः प्रलयः शान्तिर्दुःस्वप्नशमनोऽन्तकः।
लोकपालो धनी क्रूरो रौद्रो घोराननः शिवः॥
मम प्रसादसुमुखोददात्वभयदक्षिणाम्।
इत्युक्त्वा स प्रयच्छेत देयं दत्त्वा व्रती पुनः॥
द्विजानानुव्रजेत्तस्मात् स्वगृह्यविधिनार्चितान्।
एवं यः पुरुषः कश्चित्सकृद्व्रतमिदं चरेत्॥

स मृतोऽपि नरो दूता न याति यममन्दिरं ।
अदृष्टोसौ समायाति विमानेनार्कमण्डलम् ॥
तस्मायाति पुरीं विष्णोस्ततः शिवपुरीं व्रजेत् ।
न्यूनं चीर्णं व्रतं तेन मुद्गलेन यथोदितं ॥
तेन नायात्यसौ लोकं मम चत्रियपुङ्गव ।

मुद्गलउवाच ।

यमस्यैतद्वचः श्रुत्वा क्वापि दूता गतास्तु मे ।
अहञ्च सर्व्वमाकर्ण्य विस्मयाविष्टमानसः ॥
स्वशरीरस्ततः प्राप्य सुप्तएवोत्थितो हरेः ।
ततोहरत्वमाविष्टो त्वां द्रष्टुमिदमागतः ।
श्रुतन्तु च मया तत्र कथितन्ते मयात्विह ॥

कृष्णउवाच ।

इत्युक्त्वा मुद्गलो राजन् प्रयातःस्वाश्रमं प्रति ।
इदं कुरुष्व कौन्तेय त्वमप्यत्र महीतले ॥
ततो यास्यस्यसन्दिग्धं परित्यज्यान्तकं दिवं ।
एवं येऽन्येऽपि पुरुषाः स्त्रियोवापि युधिष्ठिर ॥
चयोदश्यां चयोदश्यां ये करिष्यन्ति भूतले ।
एकभक्तेन नक्तेन उपवासेन वा पुनः ॥
यमादर्शननाम्ना वै व्रतं सर्व्वव्रतोत्तमं ।
ते सर्व्वपापनिर्मुक्ता विमानेनार्कवर्च्चसा ॥
यास्यन्तीन्द्रपुरीं रम्यामप्सरोगणसंवृतां ।
दोधूयमानाश्चमरैस्तूयमानाः सुरासुरैः ।
गीतवादित्रनिर्घोषैर्म्लक्षपंक्तिविराजिताः ।

अदृष्टा घोररूपैस्ते यमदूतैर्युधिष्ठिर ॥
अनाहिता व्याधिशतैः पिशाचाद्यैरगोचराः।
अताडिता महारौद्रैर्नानाप्रहरणाःश्वताः॥
यमदृष्टिपथामुक्ताः सर्वसौख्यसमन्विताः।
सर्व्वालङ्कारसंयुक्ताः स्वशिरःसौम्यदर्शनाः॥
स्वर्गं वसन्ति सुचिरं भाविताःस्वेन कर्म्मणा।

स्नाप्य त्रयोदशमुनीन् घृतपायसेन
सम्भोज्य पूज्य तिलतण्डुलसम्प्रदानैः।
कुर्व्वन्ति ये व्रतमिदं चिदशेऽङ्कि पार्थ
पश्यन्ति ते यममुखं न कदाचिदेव ॥

## इति भविष्योत्तरोक्तं यमादर्शनत्रयोदशीव्रतम्।

---

गुरुवारे त्रयोदश्यामपराह्णे जलप्लुतः।
तर्पयित्वा देवपितॄन् ऋषींश्च तिलतण्डुलैः॥
नरसिंहं समभ्यर्च्य यः करोत्युपवासकं।
सर्वपापविनिर्मुक्तोविष्णुलोके महीपते ॥

## इति नरसिंहपुराणोक्तं नरसिंहत्रयोदशीव्रतम्।

---

युधिष्ठिर उवाच।

ब्रूहि मे यदुशार्दूल व्रतं गन्धविनाशनम्।
तिक्तागन्धस्य देहस्य दौर्भाग्यनाशनं तथा॥

कृष्ण उवाच ।

इमं प्रश्नं पुरा पार्थ जातूकर्णीमहामुनिः ।
पृष्टोराज्ञ्या महामत्या कालनन्दनया तथा ॥
कथयामास तां हृष्ट उपविष्टा शृणोति सा ।
देवी कृताञ्जलिपुटा जातूकर्ण्योऽवदद्भुतं ॥
ज्यैष्ठमासि सिते पक्षे त्रयोदश्यां युधिष्ठिर ।
स्नात्वा पुण्यनदीतोये पूजयेच्छुभदेशजम् ॥
श्वेतमन्दारमर्कं वा करवीरञ्च रक्तकम् ।
निम्बञ्च सूर्य्यदेवस्य वल्लभं दुर्लभं तथा ॥
दीप,नैवेद्य,पुष्पाद्यैर्मन्त्रेणानेन पाण्डव ।
निरीक्ष्य गगने सूर्य्यं स्नात्वा हृदि समुच्चरेत् ॥
सूर्य्य त्वं श्वेतमन्दारश्वेतार्कार्कस्य सम्भव ।
करवीर नमस्तुभ्यं निम्बवृत्त नमोऽस्तु ते ॥
इत्थं योऽर्चयते भक्त्या वर्षे वर्षे पृथक नरः ।
द्रुमत्रयं नृपश्रेष्ठ नारी वा भक्तिसयुता ॥
तस्याः शरीरे दुर्गन्धो दुर्भाग्य वा न जायते ।
न सापत्नभयं लोके न बन्ध्यादोषजम्भवेत् ॥
जायतेऽतीव सौभाग्यमन्यस्त्रीदुर्लभं नृप ।
कथितं याशरिष्यन्ति गन्धदौर्भाग्यनाशनं ॥
सर्व्वदोषैर्विनिर्मुक्ताः सुखमश्नन्ति भारत ।
निम्बं नवार्ककरवीरलतासुपुष्पं ॥
याः पूजयन्ति कुसुमाक्षतदीपदानैः ।

* दौर्मंत्यमाशनमिति पुस्तकान्तरे पाठः ।

ताः सर्व्वकामसुखवृद्धिसमृद्धिभाजो
दौर्भाग्यदोषरहिताः सुभगा भवन्ति।
इति भविष्योत्तरोक्तं दुर्गन्धदौर्भाग्यनाशन
त्रयोदशीव्रतम्।

---

युधिष्ठिर उवाच।

कान्तारवनदुर्गेषु प्रविशन्ति नदीषु च।
समुद्रतरणे चैव संग्रामेषु वरार्द्दने॥
देवतां कां स्मरेत्तत्र परित्राणकरीं विभो।
कथञ्च देव कुरुते परित्राणकृते जनः॥

कृष्णउवाच।

सर्व्वमङ्गलमाङ्गल्यां दुर्गां भगवतीं उमां।
नाप्नोति दुःखं पुरुषः संस्मरन् सर्व्वमङ्गलां॥
अलक्ष्यलक्षं भूतस्य सर्व्वस्य हृदये स्थितां।
न भयं समवाप्नोति संस्मरञ्जगदम्बिकां॥
यदा तु शास्त्रं विज्ञातुमवन्यामहमागतः।
गुरोः सन्दीपनेपार्श्वं त्वलेन सह भारत॥
प्राप्तविद्येन च मया प्रतिज्ञाताश्च दक्षिणाः।
दिव्यं भावं विदित्वामे तेनाहं भावितस्तदा॥
प्रभासतीर्थं पुत्रो मे मृतोऽसौ दीयते त्वया।
मया ध्याता ततोदेवी सर्व्वापत्सुच तारणी।

अङ्कावङ्केति विख्याता तदा देवी च मङ्गला ॥
त्रितयं योऽर्चयेत्पार्थ तस्य सर्वत्र मङ्गलं ।
संहितान्तरङ्गत् बलभद्र मङ्गला वेति त्रयं ॥
ततः प्रभृति तत्रस्थाः पूजयन्ति जनाः सदा ।
मात्रैव बलभद्रस्य मध्यस्थां सर्वमङ्गलां ॥
वामे नारायणः सोऽहं कृपाद्वो भवतस्ततः ।
त्रयोदश्यां सिते पक्षे मासि मासि धृतव्रतः ॥
एकभक्तेन नक्तेन उपवासेन वा पुनः ।
गन्धैः पुष्पैः सदीपैश्च मधुसीधुसुरासवैः ।
पललोण्डरकैः क्षिप्रं बलिभक्तैश्च भक्तितः ॥
योऽभ्यर्चयेत राजेन्द्र सर्व्वपापैः प्रमुच्यते ।
सर्व्वापत्सु तरत्येव त्रितयं संस्मरेच्च यः ॥
अथवा दूरदेशस्थः कारयेत् प्रतिमात्रयं ।
मृण्मयं काञ्चनं चापि लिखितं चित्रकेऽपि च ॥
पूजयित्वा विधानेन सर्वं तत् फलमश्नुते ।
एतत्त्रयं त्रिदशमेऽह्नि सिते सदैव
यः पूजयेत् कुसुममांससुरोपहारैः ।
नश्यन्ति तस्य भवनेष्वतिभीषणानि
चौरारिजन्तुजनितानि भयानि सद्यः* ॥

इति भविष्योत्तरोक्त* सर्व्वमङ्गलात्रयोदशीव्रतम् ।

---

* नश्यन्तीति पुस्तकान्तरे पाठः ।

† इति भविष्योत्तरोक्तं अङ्कावङ्कामङ्गला त्रयोदशी व्रतं मिति पुस्तकान्तरे पाठः ।

मार्कण्डेय उवाच।

शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः।
पूजयेत् कामदेवन्तु वैशाखात् प्रभृति प्रभो॥
गन्ध,माल्य,नमस्कार,दीप,धूपान्नसम्पदा।
दद्याद्व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा॥
कृत्वा व्रतं वत्सरमितदिष्ट
मासाद्य नाकं * सुचिरं मनुष्यः † ।
मानुष्यमासाद्य भवत्यरोगः
सुखान्वितो रूपसमन्वितश्च॥

इति विष्णुधर्म्मोक्तं कामदेवव्रतं।

---

मार्कण्डेय उवाच।

शुक्लपक्षे महाराज त्रयोदश्यामुपोषितः।
फाल्गुनात्तु समारभ्य नित्यं संपूजयेन्नरः॥

महाराजन्तु धनदं।

गन्धमाल्यनमस्कार दीपधूपान्नसम्पदा।
सुवर्णं ब्राह्मणेन्द्राय व्रतान्ते प्रतिपादयेत्॥
कृत्वा व्रतं वत्सरमेत दिष्टं
पक्षेषु राजन् सुचिरं† उपोष्य।

---

* प्राप्नोत्यथाब्दिरथ मिति पुस्तकान्तरे पाठः।
† मनुष्य इति पुस्तकान्तरे पाठः।

मानुष्यमासाद्य धनान्वितः स्यात्
सौभाग्ययुक्तश्च तथा विरोगः ॥

इति विष्णुधर्म्मोत्तरोक्तं मन्दव्रतं ।

---

व्यास उवाच ।

त्रयोदश्यां ततो रात्रौ सोपहारं त्रिलोचनं ।
दृष्ट्वेशं प्रथमे यामे मुच्यते सर्व्वपातकैः ॥

इति भविष्यत्पुराणोक्तं प्रदोष व्रतं ॥

---

सनत्कुमार उवाच ।

अथ स्वस्त्ययनं पुंसां शृण्वतामघनाशनं ।
त्रयोदश्यां महाबुद्धे व्रतमेतत्त्रिधामय ॥
नवनीतं नवज्ञ्च रजताञ्जसमप्रभं ।
कपित्थफलमात्रं यत्समादाय सुसंयतः ॥
रौप्यताम्रमये पात्रे सौवर्णे वाथ मृण्मये ।
सुवर्णरचिते तस्य निक्षिपेत् प्राङ्मुखः शुचिः ॥
स्नातश्च कृतजप्यश्च शुक्लाम्बरधरः स्वयं ।
मण्डलं पुष्पनिकरै रचितैर्वा प्रकल्पयेत् ॥
तस्मिन्नष्टदलं पद्मं कारयेत् कुसुमोत्करैः ।
तत्र लक्ष्मीपतिं देवं लक्ष्म्या युक्तन्तु दिव्यया ॥
कर्णिकायां समावाह्य दलेष्वावाहयेत्तथा ।
अक्षीरष्टौ तु तस्यग्रे दिंशां पालांस्तु वाग्यतः ॥

विधाय देवयजनं स्वादुमूलफलानि च ।
तदग्रे तत्समानीय नवनीतं नवं शुचिः ।
द्विधा कृत्वा तदेकैकं मन्त्रेणैवाभिमन्त्रयेत् ॥

मन्त्रः ।

पुरुषः पूर्णकामश्च हरिर्भद्रं करोतु नः ।
योषिद्व्रते सदा लक्ष्मीर्मङ्गलं दिशतु स्वयं ॥
एवं कृत्वा ततः पत्न्यै दद्यादेकैकमयतः ।
पूर्व्वं पुंलक्षितं पिण्डमितरञ्च तथापरम् ।

इतरं स्त्रीलक्षितं ।

प्राश्याचम्य स्थितां पत्नीं प्रयतामभिमन्त्रयेत् ।
यस्त्वन्तरात्मा भूतानामनादिनिधनच्युतः ॥
स परःपरया भक्त्या कुक्षिं रक्षन्तु मे सदा ।
सर्व्वपुष्टिप्रजननी सर्व्वार्त्तिशमनी तथा ॥
लक्ष्मीः कुक्षिगतं गर्भं रक्षतादच्युतप्रिया ।
सर्व्वार्त्तिक्षयदक्षाणि दिव्यशक्तियुतान्यपि ॥
त्वा रक्षन्तु सदा विष्णोःसर्व्वप्रहरणान्यपि ।
तथा दिक्पतयः सर्व्वे रक्षन्तु गृहदेवताः ॥
पान्तु संसारसंयुक्तां सर्व्वे रक्षन्तु सर्व्वदा ।
इति कृत्वा ततः कुर्य्याद्ब्राह्मणानाञ्च तर्पणम् ॥
गुरवे च वरं दत्त्वा नियमान् प्रतिपालयेत् ।
बध्वा सह्योपवस्त्रञ्च तद्दिनं प्रयतात्मना ॥
चतुर्द्दश्यान्तु सुस्नातः कृतपूजाविधिः शुचिः ।
ब्राह्मणान् भोजयित्वा तु दद्याच्च गुरुदक्षिणाम् ॥

भुञ्जीत बान्धवैः सार्द्धं नियमानुतस्त्वजेत्ततः॥
एवं कुर्व्वन्नरः शुद्धो बहुपत्यश्च विन्दति।
वन्ध्यापि लभते पुत्रं मनोनयननन्दनम्॥
कन्यापि सुपतिं विन्देत् व्रतेनानेन सुव्रता।
माङ्गल्यं परमं प्राप्य दीर्घमायुश्च विन्दति॥

## इति वाराहपुराणोक्तं त्रयोदशीव्रतम्।

---

कृष्ण उवाच।

गौरीं विवाह्य जग्राह हरः पाशुपतं व्रतम्।
उमापतिः पशुपतिर्ध्यानासक्तो बभूव ह॥
ब्रह्मादिभिश्च संमन्त्र्य विश्वस्य पुत्रलब्धये।
गौर्य्या मनोभिलषितपूरणाय प्रहर्षितैः॥
प्रहितः क्षोभणार्थाय समर्थ इति मन्मथः।
ततोमारो जगामाथ आश्रमं रतिसंयुतः॥
ईश्वरस्य धनुःपाणिर्व्वसन्तश्रीसहायवान्।
सचेक्षुचापमाकृष्य मदनोन्मादनं शरम्॥
चिक्षेप त्रिपुरघ्नाग्रे समाधेर्भङ्गहेतवे।
बुद्ध्वा तु तस्य सङ्कल्पं रुद्रः क्रोधज्वलद्वपुः॥
ललाटे वह्निमसृजत् तृतीयनयनाद्धरः।
कामोवलोकितस्तेन भस्मीभूतश्च तत्क्षणात्॥
दग्धं दृष्ट्वा स्मरं शोकाद्रतिप्रीत्यौस्थिते सदा।

करुणं विलपन्त्यौ च सर्व्वमन्यद्दिगागते ॥
ततः शोकार्त्तहृदया गौरी रुद्रमुवाच ह।
भगवन् मद्‌व्रत संरब्धः कामं निर्द्दग्धवानसि ॥
तेनैते पश्यतार्त्ते हे कामस्य रुदितः कथम्।
कुरु प्रसादं देवेश रतिप्रीत्योर्वृषध्वज ॥
सञ्जीवय पुनःशम्भो मूर्त्तिमन्तं पुनः कुरु।
तच्छ्रुत्वा तु महादेवो हृष्टः प्रोवाच पार्वतीं
उपप्लुतं जगत्सर्व्वं मन्मथेन शरीरिणा।
मया दग्धस्य कामस्य पुनरागमनञ्‌ कुतः ॥
किन्तु ते मानवद्वाक्य करोमि सफलं प्रिये।
अस्मिन्वसन्तसमये शुक्लपक्षे त्रयोदशी ॥
यस्यां मनोभवोदेवो भविष्यति शरीरवान्।
एतेन बीजभूतेन जगद्वर्त्तिष्यतेऽखिलम् ॥
एवं वरमिदं दत्त्वा मन्मथाय युधिष्ठिर।
जगाम हिमवत्पृष्ठे कैलाशं पार्वतीप्रियः।
तदेतत्ते समाख्यातं स्मरस्य चरितं नृप ॥
पूजाविधानमपरं कथयामि शृणुष्व तत्।
यस्यां स्नात्वा त्रयोदश्यामशोकाख्यं नगं लिखेत् ॥
सिन्दूररजनीरक्तं रतिप्रीतिसमन्वितम्।
कामदेवं मत्तवाजिवक्त्रं तत्र हृषध्वजम् ॥
सौवर्णं वा महाराजतत्पत्रमथापि वा।
लीलाविलासगमनगर्वितस्थानसुरोगणं ॥

---

† कथरत्नेन मन्मथ इति पुस्तकान्तर।

गन्धर्वं गीतवादित्रप्रेक्षणीय समाकुलम् ।
गंधावक्तं ऋतुक्रीडाप्रीति विद्याधरीयुतं ॥
मध्याह्ने पूजयेत् भक्त्या भक्ष्यैर्धूपैः सुगन्धकैः ।
मन्त्रेणानेन राजेन्द्र नरनारीसमन्वितं ।
नमः कामाय देवाय देवदेवाय मूर्त्तये ॥
ब्रह्मविष्णुसुरेशानां* मनःक्षोभकराय वै ।
इत्येवमर्चयित्वा तु देवदेवं मनोभवं ॥
ततस्तदग्रतो देया मोदकाः खण्डमोदकाः ।
नानाप्रकारान् भक्ष्यांश्च कामो मे प्रीयतामिति ॥
ततो विसर्जयेद्विप्रान् दत्त्वा युग्मं सदक्षिणं ।

युग्मं गोमिथुनं* ।

स्वपतिं पूजयेन्नारी वस्त्रमाल्यविभूषणैः ।
कामोऽयमिति सञ्चिन्त्य प्रहृष्टेनान्तरात्मना ॥
समाप्ताय महापूजां* यजमानः सुहृद्वृतः ।
रात्रौ जागरणं कुर्य्यात् सुखरात्रिर्यथा भवेत् ॥
कर्पूरं कुङ्कुमक्षोदगन्धताम्बूलसज्जनैः ।
मुद्राणां मधुदानैश्च कुर्य्याद्रास महोत्सवं ॥
दीपप्रज्वलनैश्चित्रैः नृत्यैः प्रेक्षणकोत्सवैः* ।

---

* सुरेन्द्राणामिति पुस्तकान्तरे ।
* वस्त्र युग्ममिति पुस्तकान्तरे पाठः ।
* समाप्यार्चनमहापूजामीषां पुस्तकान्तरे पाठः ।

एवं यः कुरुते पार्थ वर्षे वर्षे महोत्सवं ॥
वसन्तसमये प्राप्ते हृष्टः पुष्टो नृपः पुरे।
तस्य संवत्सरं यावत् शोकरोगैर्विमुच्यते ॥
सुभिक्षक्षेममारोग्यं यशश्रीसौख्यमुत्तमं।
कामवर्षी च पर्जन्यः तस्मिन् राष्ट्रे प्रजायते ॥
तुष्यते नात्र सन्देहो द्वादशार्द्धार्द्धलोचनः।
तथा कामश्च विष्णुश्च वसन्तश्च प्रजापतिः ॥
चन्द्रसूर्य्यादिकाः सर्व्वे ग्रहा ब्रह्मर्षयस्तथा।
सर्वेऽपि तस्य तुष्यन्ति यक्षगन्धर्व्वराक्षसाः ॥
असुरा यातुधानाश्च सुपर्णाः पन्नगा नगाः।
तुष्टाः प्रयच्छन्ति सुखं तस्य कर्त्तुर्न संशयः ॥
चैत्रोत्सवे सकललोकमनोनिवासे।
कामं वसन्तमलयाद्रिमरुत्सहायं* ॥
पत्नया सहार्च्य पुरुषप्रवरोऽथ योषित्।
सौभाग्यरूपसुतसौख्ययुता सदा स्यात् ॥

## इति भविष्योत्तरोक्तमदनमहोत्सवः।

---

व्यास उवाच।

मन्दवारयुता पुण्या शुक्लपक्षे त्रयोदशी।
तस्यामुपोष्य विधिवत्सम्पूज्य गिरिजापतिं ॥
ब्रह्महत्यादिभिः पापैर्मुक्तो भवति मानवः ॥

## इति सौरपुराणोक्तं सर्व्वव्रतम्।

---

* कामवसन्तमलयाद्रिवहेतसहायमिति पुस्तकान्तरे पाठः।

पुष्यादितस्त्रयोदश्यां कृत्वा नक्तमथो पुनः ।
अशोकं काञ्चनं दद्यादिक्षुयुक्तं दशाङ्गुलं ॥
विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति ।
कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात् पुमान् नृपः* ।
एतत् कामव्रतं नाम सदा शोकविनाशनं ॥

## इति पद्मपुराणोक्तं कामव्रतम् ।

---

ब्रह्मोवाच ।

कामं पूज्य* त्रयोदश्यां सुरूपो जायते ध्रुवम् ।
इष्टां रूपवतीं भार्य्यां लभेत् कामांश्च पुष्कलान् ॥
मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः ॥
गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजाशाठ्येन शाठ्येन कृतापि तु फलप्रदा ॥
आज्यधारा समिद्भिश्च दधिक्षीरान्नमाक्षिकैः ।
पूर्व्वोक्तफलदो होमः कृतः शान्तेन चेतसा ॥
एतद्व्रतं वैश्वानरप्रतिपद्व्रतवत् व्याख्येयम् ।

## इति भविष्यत्पुराणोक्तं कामत्रयोदशीव्रतम् ।

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य समस्त
करणाधीश्वर-सकल-विद्याविशारद श्रीहेमाद्रि--
विरचिते चतुर्व्वर्गचिन्तामणौ व्रतखण्डे
त्रयोदशीव्रतानि ॥

---

* नर इति पुस्तकान्तरे पाठः ।
* कामपूजेति पुस्तकान्तरे पाठः ।

## अथ अष्टादशोऽध्यायः ॥

———000———

### अथ चतुर्द्दशीव्रतानि ।

दिग्दन्तावलकर्णतालपवन-प्रेङ्खोलभृङ्गाङ्गना
सङ्गीतिश्रुति मिश्रितं सुमधुरं वैकुण्ठ-कुण्ठस्वरैः ।
कीर्त्तिं किन्नरयोषितः प्रतिदिशङ्गायन्ति यस्यानिशं
हेमाद्रिः स चतुर्दशीव्रतगणं ब्रूते महासिद्धिदं ॥

श्रीकृष्ण उवाच ।

अनन्त व्रतमप्यन्यत्तिथा वक्ष्याम्यनुत्तमं ।
सर्वपापहरं नृणां स्त्रीणां चैव युधिष्ठिर ॥
शुक्लपक्षे चतुर्द्दश्यांमासि भाद्रपदे भवेत् ।
तस्यानुष्टानमात्रेण सर्वपापाद्व्यपोहति ॥

युधिष्ठिर उवाच ।

कृष्ण कोयमनन्तेति प्रोच्यते यस्तया विभो ।
किं शेषनाग आहोस्विदनन्तस्तक्षकः स्मृतः ॥
परमात्मा तथानन्त उताहो ब्रह्म उच्यते ।
क एषोऽनन्तसंज्ञोवै तथ्यं मे ब्रूहि केशव ॥

श्रीकृष्ण उवाच ।

अनन्त इत्यहं पार्थ ममरूपं निबोध वै ।
आदित्यादिषु हा वारा यः काल उपपद्यते ॥

कला-काष्ठा-मुहूर्त्तादि दिनरात्रि शरीरवान् ।
पक्षमासर्त्तु-वर्षाणि युगकल्प-व्यवस्थया ॥
योऽयं कालो मया ख्यातः सोऽनन्त इति कीर्त्त्यते ।
सोऽहं कलावतीर्णोऽत्र भुवो भारावतारणात् ॥
दानवानां विनाशाय साधूनां पालनाय च ।
अनादि मध्यमथ्यन्तकृष्णं विष्णुं हरिं शिवं ॥
ब्रह्माणं भास्करं सोमं सर्व्वव्यापकमीश्वरं ।
विश्वरूपं महाकालं सृष्टि संहारकारकं ॥
प्रत्ययार्थं मया रूपं फाल्गुनाय प्रदर्शितं ।
सर्व्वमेव महाबाहो योगिध्येयमनुत्तमं ॥
विश्वरूपमनन्तञ्च यस्मिन्निन्द्राश्चतुर्द्दश ।
वसवोष्टौ द्वादशार्का रुद्रा एकादशामलाः ॥
सप्तर्षयः समुद्राश्च पर्व्वताः सरितोद्रुमाः ।
नक्षत्राणि दिशोभूमिः पातालं भूर्भुवः स्वश्च ।
मा कुरुष्वात्र सन्देहं सोऽहं पार्थ न संशयः ॥

युधिष्ठिर उवाच ।

अनन्तव्रतमाहात्म्यविधिं विधिविदाम्वर ।
किं पुण्यं किं फलं यत्स्यादनुष्ठानवतां नृणां ॥
केन वादौ पुरा चीर्णं मर्त्त्ये केन प्रकाशितं ।
एवं सविस्तरं कृष्ण ब्रूह्यनन्त व्रतंमम ॥

श्रीकृष्ण उवाच ।

आसीत् पुरा कृतयुगे सुमन्तुर्नाम वै द्विज ।

वसिष्ठगोत्रेचोत्पन्नः सुस्वरूपां भृगोःसुतां ॥
दीक्षां नामोपयेमे तां वेदोक्तविधिना नृप।
तस्याः कालेन सञ्जाता दुहिता नन्ददायिनी॥
शीला नाम सुशीला सा न्यवसत्पितृसद्मनि।
ततः कालेन कियता ज्वरदाहेन पीड़िता॥
विननाश नदीतीरे ययौ स्वर्गं पतिव्रता।
सुमन्तुस्तु ततो यज्ञे धर्म्मं पुंसः सतां पुनः॥
उपयेमे विधानेन कर्कशां नाम नामतः।
दुःशीलां कर्कशां चण्डीं नित्यं कलहकारिणीं॥
सापि शीला पितुर्गेहे गृहार्चनरता बभौ।
कुड्यस्तम्भाङ्गन-द्वार-देहली-तोरणादिषु॥
वर्णैश्चित्रमकरोत् नील-पीत-सिता-सितैः।
स्वस्तिकैः शङ्खपद्मैश्च अर्चयन्ती पुनः पुनः॥
ततः काले बहुतिथे गते मारदृशानुगा।
पित्रा दृष्टा तदातेन श्रोचिन्ते यौवने स्थिता॥
कस्मै देया मया शीला विचार्य्यैवं सुदुःखितः।
पिता ददौ द्विजेन्द्राय कौण्डिन्याय शुभे दिने॥
गृह्योक्तविधिना पार्थ विवाहमकरोत्तदा।
निर्वर्त्त्योद्वाहिकं सर्वं प्रोक्तवान् कर्कशां द्विजः॥
किञ्चिद्दायादिकं देयं जामातुः परितोषकं।
तत् श्रुत्वा कर्कशाक्रुद्धा प्रोञ्छाय गृहमण्डनं॥
पटायां सुस्थितं कृत्वा स्वगृहं गम्यतामिति।
भोज्यावसिष्टचूर्णेन पाथेयञ्च चकार सा॥

कौण्डिन्योऽपि विवाह्येनां पथि गच्छन् शनैः शनैः।
शीलां सुशीलामादाय नवोढ़ां गोरथेन हि॥
मध्याह्ने भोज्यवेलायां समुत्तीर्य्य सरित्तटे।
ददर्श शीला स्त्रीणां सा समूहं रक्तवाससां॥
चतुर्द्दश्यामर्च्चयन्तं भक्त्या देवं जनार्द्दनं।
उपगम्य शनैः साथ प्रपच्छ स्त्रीकदम्बकं॥
आर्य्याः किमेतन्मे ब्रूत किं नाम व्रतमीदृशं।
ता ऊचु र्योषितस्तां तु शीलां शीलविभूषणां॥
अनन्तव्रतमेतद्धि व्रतेऽनन्तस्तु पूज्यते।
सा ब्रवीदहमेतत्ते करिष्ये व्रतमुत्तमं॥
विधानं कीदृशं तत्र किं दानं कोऽत्र पूज्यते।

स्त्रिय ऊचुः।

शीले सदन्नप्रस्थस्य पुन्नामसंस्कृतस्य च।
अर्द्धं विप्राय दातव्यं अर्द्धमात्मनि भोजनं॥
शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यविवर्जितां।
कर्त्तव्यं स सरीत्तीरे विधिनानेन मानिनि॥
स्नात्वा नन्तं समभ्यर्च्य गन्धलेपनधूपनैः।
पुष्पैर्गन्धैः सुनैवेद्यैः पीतरक्तैश्चतुःसमैः॥
तस्याग्रतो दृढ़ं सूत्रं कुङ्कुमाक्तं सुडोरकं।
चतुर्द्दशग्रन्थियुतं वामे करतले न्यसेत्॥
मन्त्रेणानेन सुश्रोणियावद्वर्षं समाप्यते॥
अनन्त संसारमहासमुद्रे
मग्नान् समभ्युद्धर वासुदेव।

अनन्तरूपी विनियोजयस्व
अनन्त सूत्राय नमोनमस्ते ॥
अनेन डोरकंबध्नाभीतव्यं स्वस्थमानसैः ।
ध्यात्वा नारायणं देवमनन्तं विश्वरूपिणं ।
भुक्त्वाचान्तो व्रजेद्वेश्म भद्रे उक्तं व्रतं तव ॥

श्रीकृष्ण उवाच ।

एवमाकर्ण्य राजेन्द्र प्रहृष्टेनान्तरात्मना ।
सापि चक्रे व्रतं शीला करे बध्वा सुडोरकम् ॥
पाथेयमर्द्धं विप्राय दत्त्वा भुक्तं स्वयं तथा ।
पुनर्जगाम संहृष्टा गोरथेन पतिर्गृहं ॥
भर्त्रासहैव शनकैः प्रत्ययस्तत्क्षणादभूत् ।
तेनानन्तव्रतेनास्या आलंगोरस-संकुलं ॥
गृहाश्रमं श्रियाजुष्टं धन-धान्य-समन्वितं ।
कुलमव्याकुलं रम्यं सर्वत्रातिथिपूजनं ॥
सापि माणिक्यकाञ्चीभि र्मुक्ताहारविभूषिता ।
देवाङ्गवस्त्रसंच्छन्ना सावित्री प्रतिमाभवत् ॥
कदाचिदुपविष्टाया दृष्टोबद्धः सडोरकः ।
शीलायाहस्तमूले तु भर्त्रा नेन द्विजन्मना ॥
श्रीमदान्धेन कौरव्य साक्षेपं त्रोटितं वृथा ।
कोऽनन्त इति मूढेन जल्पता पापकारिणा ॥
शिवा ज्वाला कुलेवह्नौ हाहाकृत्वा प्रधाविता ।
शीला गृहीत्वा सूत्रञ्च क्षीरमध्ये समाक्षिपेत् ॥

तेन कर्म्मविपाकेन तस्य सा श्रीः क्षयं गता।
गोधनं तस्करैर्नीतं गृहं मुष्टमकाञ्चनं॥
यद्यन्नैवागतं तत्र तत्रैव च विनिर्गतम्।
स्वजनैः कलहोमित्रैर्वैरञ्चनं भर्जनं तथा॥
अनन्ताक्षेपदोषेण दारिद्र्यं पतितं गृहे।
न कश्चिद्वदतोलोके तेन सार्द्धं युधिष्ठिर॥
शरीरेणाति सन्तप्तो मायया ह्यतिदुःखितः।
निर्वेदं परमं प्राप्तः कौण्डिन्यः प्राह तां प्रियां॥
शीले किमेतदुत्पन्नं सहसाश्रीकक्कारकं।
येनातिदुःखतोऽस्माकं जातः सर्वधनक्षयं॥
स्वजनैः कलहोगेहे नकश्चिन्मेप्रभाषते।
शरीरे तीव्रसन्तापः खेदश्चेतसि दारुणः॥
जानासि दुर्नयः कोऽत्र किं कृतं दुष्कृतं भवेत्।
प्रत्युवाच तं शीला सुशीलाशीलमण्डना॥
प्रायोऽनन्तकृताक्षेप पापसम्भवजं फलं।
भविष्यति महाभाग तदर्थं यत्नमाचर॥
एवमुक्तः सविप्रर्षि र्जगाम मनसा हरिं।
निर्वेदोमिर्जगामाथ कौण्डिन्यः प्रयतोवनं॥
तपसे कृतसङ्कल्पो वायुभक्ष्यो द्विजोत्तमः।
मनस्याध्याय चानन्तं द्रक्ष्यामि ततो विभुं॥
यस्याप्रसादात्सञ्जातमाक्षेपान्निधनं गतं।
धनादिकं ममातीव सुखदुःखप्रदायकं॥
एवं सञ्चिन्तयत् सोऽथ वभ्राम विजने वने॥

तत्रापश्यत् महाचूतं फलितं पुष्पितं तथा।
वर्जितं पक्षिसङ्घातैः कीकटे विभवं यथा॥
तमपृच्छत्त्वयानन्तः कच्चिद्दृष्टो महातरो।
ब्रूहि सौम्य ममातीव दुःखं चेतसि वर्त्तते॥
सोऽब्रवीद्भद्र नानन्तं वेद्मि द्रक्ष्यामि वा द्विज।
एवं निराकृतस्तेन जगामाथ द्विजस्ततः॥
क्व द्रक्ष्यामीति गच्छन् स गामपश्यत्सवत्सकां।
तृणमध्ये प्रधावन्तीमितश्चेतश्च पाण्डव॥
अपृच्छद्धेनुके ब्रूहि यद्यनन्तस्त्वयेक्षितः।
साचोवाचाथ कौण्डिन्यं नानन्तं वेद्म्यहं द्विजः॥
ततो व्रजन् ददर्शाग्रे रम्यं पुष्करिणीद्वयं।
अन्योन्यजलकल्लोल-वीचिपर्य्यङ्कसङ्गमम्॥
छन्नं किञ्जल्ककह्लार-कमलोत्पलमण्डलैः।
सेवितं भ्रमरैर्हंसैश्चक्रैः कारण्डवैर्बकैः॥
ते चापृच्छद्द्विजोऽनन्तो भवतीभ्यां न लक्षितः।
जपतस्ते द्विजश्रेष्ठ नानन्तं वेद्मि हे किल॥
ददर्शाथ वने तस्मिन् गर्द्दभं कुञ्जरं तथा।
तावप्यातौ द्विजेनोक्तौ ऊचतुर्नैव विद्महे॥
एवं सम्यक् क्व द्रक्ष्यामि तत्रैव भूवि तादृशः।
कौण्डिन्यो विह्वलीभूतो निराशो जीविते नृप॥
दीर्घमुष्णञ्च निश्वस्य पपात भुवि भारत।
प्राप्य संज्ञामनन्तेति जल्पन्नुत्थाय स द्विजः॥
नूनं पश्याम्यहं प्राणानिति सङ्कल्प्य चेतसि।

तस्यायोद्दुध्य वर्षेऽस्मिन् तावद्भारत सत्तम ॥
कृपयानन्तदेवोऽस्य प्रत्यक्षं समजायत ।
वृद्धब्राह्मणरूपेण एह्येहीत्येवमुवाच तं ॥
प्रगृह्य दक्षिणे पाणौ गुहामाविश्य तं स्वतः ।
स्वां पुरीं दर्शयामास दिव्यनारीनरैर्युतं ॥
तस्यां निविष्टमात्मानं दिव्यसिंहासने शुभे ।
पार्श्वस्थं शङ्खचक्राद्य गदागरुड़शोभितं ॥
दर्शयामास विप्राय विश्वरूपमनन्तकम् ।
विभूतिभेदैश्चानन्तैरनन्तममितौजसं ।
तं दृष्ट्वा तादृशं रूपमनन्तमपराजितम् ॥
वेपमानो जगादोच्चैर्जयशब्दपुरःसरं ।
जय कृष्ण जयानन्त विश्वमूर्त्ते जयाव्यय ॥
जय सर्व्वैककर्त्तेति संहर्त्तं च जयाच्युत ।
अनादि निधना, व्यक्त जय मित्य जयाक्षर ॥
जय सर्वग सर्व्वात्मन् सर्व्वस्य हृदयेशय: ।
एवमादि प्रणम्याथ पुनरप्याह तं द्विजं ॥
पापोऽहं पापकर्म्माहं पापात्मा पापसम्भवः ।
त्राहि मां पुण्डरीकाक्ष सर्व्वपापहरो भव ॥
तच्छ्रुत्वा नन्तदेवस प्राह सुस्निग्धया गिरा ।
माभैस्त्वं ब्रूहि विप्रेन्द्र यत्ते मनसि वर्त्तते ॥

कौण्डिन्य उवाच ।

मया भूत्वा विलुप्तेन त्रोटितोऽनन्तडोरकः ।
तेन पापविपाकेन भूतिर्मे प्रलयं गता ॥

स्वजनैः कलही गेहे न कश्चिन्मां प्रभाषते ।
निर्वेदात् भ्रमितोऽरण्ये तव दर्शनकाङ्क्षया ॥
कृपया देवदेवस्य त्वया स्वात्मा प्रदर्शितः ।
तस्य पापस्य मे शान्तिं कारुण्याद्वक्तुमर्हसि ।

श्रीकृष्ण उवाच ।

तच्छ्रुत्वानन्तदेवेश उवाच द्विजसत्तमं ।
भक्त्या माता पिता देवः किं न दद्याद्युधिष्ठिर ॥

अनन्त उवाच ।

स्वगृहं गच्छ कौण्डिन्य मा विलम्बं करिष्यसि ।
वरानन्तव्रतं कुर्य्यात् नववर्षाणि पञ्च च ॥
ततः पापविशुद्धात्मा प्राप्स्यसे ऋद्धिमुत्तमां ।
पुत्रपौत्रान् समुत्पाद्य भुक्ता भोगान्मनोनुगान् ॥
अन्ते च स्मरणं प्राप्य मामुपैष्यस्यसंशयम् ।
अन्यच्चते वरन्दद्मि सर्व्वलोकोपकारकम् ॥
इदमाख्यानकं श्रुत्वा शीलानन्तव्रतादिकम् ।
करिष्यति नरोयस्तु कुर्व्वन् व्रतमिदं शुभम् ॥
सोऽचिरात्पापनिर्म्मुक्तः प्राप्नोति परमां गतिं ।
गच्छ विप्र गृहं शीघ्रं यथायेनागतोह्यसि ॥

कौण्डिन्य उवाच ।

स्वामिन् पृच्छामि मे ब्रूहि किञ्चित् कौतूहलं मया ।
अरण्ये भ्रमता दृष्टं न तद्वेद्मि जगद्गुरो ॥
स चूत वृक्षस्तस्मिन् गौरेका च वृषभस्तथा ।

कमलोत्पलकह्लारैः शोभितं सुमनोहरं ॥
मया दृष्टं महारण्ये किं तत् पुष्करिणीद्वयं ।
कः खरः कुञ्जरः कोऽसौ कोऽसौ वृद्धोद्विजोत्तमः ॥

अनन्त उवाच ।

स चूतवृक्षोविप्रोऽसौ वेदार्थस्य विशारदः ।
सोर्थितोऽपि नवै प्रादा च्छिष्येभ्य स्तरताङ्कृतः * ॥
सा गौ वसुन्धरा दृष्टा सुफला या त्वया द्विज ।
वृषोधर्म्मस्त्वयादृष्टः शाद्वलं सत्यमाश्रितः ॥
धर्म्म व्यवस्थानं तच्च यत्तत्पुष्करिणीद्वयं ।
ब्राह्मण्यौ केचिदप्यास्तां भगिन्यौ ते परस्परं ॥
धर्म्माधर्म्मादि यत्किञ्चित् तं निवेदयतोमिथः ।
विप्राय न कश्चिद्दत्तमतिथौ दुर्बलोऽपि वा ॥
भिक्षा दत्ता नचार्थिभ्यो तेन पापेन कर्म्मणा ।
वीचीकल्लोलमालाभिर्गच्छतस्ते परस्परम् ॥
खरः क्रोधः त्वयादृष्टः कुञ्जरो रोगउच्यते ।
ब्राह्मणो सावनन्तोऽहं गुहासंसारगह्वरम् ॥
इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत ।
स्वप्नप्रायञ्च तद्दृष्ट्वा ततः स्वगृहमागतः ॥
कृत्वानन्तव्रतं सम्यक् नववर्षाणि पञ्च च ।
भुक्त्वासर्व्वमनन्तेन यथोक्तं पाण्डुनन्दन ॥
अन्ते च स्मरणं प्राप्य गतोऽनन्तपुरे द्विजः ।
तथा त्वमपि राजेन्द्र कथां शृण्वन् व्रतं कुरु ॥

---

* उपपन्नेभ्यः शिष्येभ्यो गर्व्वात् विद्यां न दत्तवानिति पुस्तकान्तरे पाठः ।

प्राप्स्यसे चिन्तितं सर्व्वमनन्तस्य वचो यथा।
यच्चतुर्द्दशमे वर्षे फलं प्राप्तं द्विजन्मना॥
वर्षैकेन तदाप्नोति कृत्वा साख्यानकं व्रतं।
यत् कृत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः॥
येऽपि शृण्वन्ति सततं तथान्ये च पठन्ति ये।
तेऽपि पापविनिर्म्मुक्ताः प्राप्स्यन्ति च हरेः पदं॥

संसारगह्वरगुहासु सुखं विहर्त्तुं
वाञ्छन्ति ये कुरुकुलोद्भव शुद्धचित्ताः।
सम्पूज्य च त्रिभुवनेशमनन्तदेवं
बध्नन्ति दक्षिणकरे वरडोरकन्ते॥

इत्यनन्तव्रतं।

---

अथोद्यापनविधिरभिधीयते।

युधिष्ठिर उवाच।

देवदेवं समाप्यैव व्रतस्य परमाद्भुतम्।
उद्यापनविधिं कृष्ण अनुग्राह्योऽस्मि केशव॥
उद्यापनविधिं विना न व्रतस्य फलं भवेत्।
तस्माद्यथातथा कुर्य्याद्वित्तशाठ्यं विवर्जयेत्॥

श्रीकृष्ण उवाच।

मासि भाद्रपदे प्राप्ते परिपूर्णे व्रते ततः।
शुक्लायां च चतुर्द्दश्यां ब्रह्मचारी व्रती नतः॥

एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः ।
स्नात्वा नद्यां देवखाते तीर्थप्रस्रवणे तथा ॥
सर्व्वौषधैः सर्व्वगन्धैस्तिलकल्कैरथामलैः ।
वेदोक्तविधिना सम्यक् तर्पयेत् पितृदेवताः ॥
ततो गृहं समागत्य वेदिं कृत्वा सुशोभनां ।
तत्रालिखेन्मण्डलकं पञ्चवर्णैः सुशोभितैः ॥
नवनालं सुसम्पूर्णं सर्व्वतोभद्रमेव च ।
तस्योपरि न्यसेत् कुम्भमव्रणं सुदृढं नवं ॥
ताम्रपात्रा समायुक्तं पञ्चरत्नसमन्वितम ।
माषकेण सुवर्णस्य दरिद्रेणापि पार्थिवः ।
कृत्वानन्तं प्रयत्नेन ताम्रपात्रोपरि न्यसेत् ॥
शय्यां सुविस्तरां कृत्वा तत्रानन्तं न्यसेद्व्रती ।
लक्ष्म्या युक्तं वासुदेवं मुशलेन हलेन च ॥
आचार्य्यं पूजयित्वा च वस्त्रैराभरणैस्तथा ॥
वर्णाङ्गुलीयचिह्नैश्च भक्त्या च सुसमाहितः ।
ततस्तं पूजयेद्देवमनन्तं विश्वरूपिणं ॥
वस्त्रयुग्मसमाच्छन्नं पीतयज्ञोपवीतिनं ।
चन्दनेन सुगन्धेन कर्पूरागुरुमिश्रिणा ॥
लेपयेच्च ततोङ्गानि* प्रीयतां मधुसूदन ॥

अनुलेपनमन्त्रः ।

ततः पुष्पाणि संगृह्य पूजयेन्नामभिः पृथक् ।
अनन्ताय नमः पादौ गुल्फौ सङ्कर्षणाय च ॥

---

* तवाङ्गानीति पुस्तकान्तरे पाठः ।

कायात्मने तु जानुभ्यां जघनं विश्वरूपिणे।
कोटिं वै विश्वरूपाय मेढ्रं वै विश्वरूपिणे॥
नाभ्यान्तु पद्मनाभाय हृदये परमात्मने।
कण्ठं श्रीकण्ठनाथाय बाहू सर्वास्त्रधारिणे।
वाचस्पते नमस्तुभ्यं मुखे संपूजयेद्धरिं।
ललाटे केशवायेति शिरः सर्व्वात्मने नमः॥
लोकात्मा सर्वभूतात्मा निमिषस्त्रुटिसंलवः॥
जन्म-मृत्यु-जरा-व्याधि-संसारभयनाशन।
वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः।
आहारः सर्व्वभूतानान्धूपोऽयं प्रतिगृह्यतां।

धूपमन्त्रः।

त्वं ज्योतिः सर्व्वभूतानां तेजसां तेजउत्तमं।
आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यतां॥

दीपमन्त्रः।

अन्नं चतुर्विधं स्वादु भूतानां जीवनं परं।
नैवेद्यन्ते मया दत्तं देव प्रीत्या प्रगृह्यतां॥
पूगीफलं सद्दान्येन कर्पूरश्च मनोहरं।
पवित्रीकृतमन्यत्तं ताम्बूलं प्रतिगृह्यतां॥
वस्त्रयुग्मं शुचियस्माद्वासुदेवस्य वल्लभं।
अनन्तः प्रीयतां तेन पीतवर्णेन मे सदा॥
एवं पूजान्ततः कृत्वा गच्छेत्कुण्डसमाश्रयं।
स्वगृह्योक्तविधानेन कृत्वाग्निस्थापनं ततः॥

प्रारभेत्तु ततोहोममश्वत्थसमिधस्तिलैः।
व्रीहिभिश्च यवैश्चैव घृतेन तु विधानतः॥
पुरुषसूक्तेन जुहुयाद्दतोदेवेति वा पुनः।
इदं विष्णुर्विचक्रमे त्रेधा निदधेपदम्॥
शतमष्टोत्तरं यावत्प्रत्येकं जुहुयाद्गुरुः।
सर्व्वंहुत्वा विधानेन मन्त्रैरेतैर्व्विचक्षणः॥

अनन्ताय स्वाहा। कालाय स्वाहा। संवत्सराय स्वाहा। अहोरात्राय स्वाहा। अर्द्धमासाय स्वाहा। मासाय स्वाहा। ऋतुभ्यः स्वाहा। संवत्सराय स्वाहा। ततोमहाव्याहृतयः। सर्व्वं प्रायश्चित्तं चरुणां आज्यतिलैः स्विष्टकृत्, प्रजापतिभ्यां जुहुयात्।

ततोवै लोकपालांश्च ग्रहान् पूज्य यथाक्रमं।
गीतवादित्रनिनदैर्दत्त्वा पूर्णाहुतिं व्रती॥
पुराणश्रवणैस्तद्वत् रात्रिशेषं नयेद्व्रती।
ततः प्रभातसमये स्नात्वा शुद्धः कृताह्निकः॥
पूर्व्वोक्तेन विधानेन पूजयेद्विश्वरूपिणम्।
पूजयित्वा हरिं देवमाचार्य्यं पूजयेत्ततः॥
परिधाप्य सपत्नीकं वस्त्रालङ्कारभूषितं।
मन्त्रैः संपूज्य विधिवद्धेनुं दद्यात् प्रयत्नतः॥
सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता।
ग्रासं गृह्ण* मया दत्तं गौमातस्त्रातु मर्हसि॥

---

* पापं प्रणाशतु वा देवीति पुस्तकान्तरे पाठः।

गावोममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः।
गावोमे हृदये सन्तु गवां मध्ये वसाम्यहं॥
गोदानस्याधानार्थं दद्यात् स्वर्णं यथाविधि॥
मंन्त्रेणानेन सम्पूज्य आचार्य्याय निवेदयेत्॥
अन्यच्च परिवासञ्च आचार्य्याय निवेदयेत्।
आमन्त्रितानथो विप्रान् पूजयेच्च चतुर्दश*।
वस्त्रोपवीतैः संपूज्य भोजयेदन्नविस्तरैः॥
ततस्तु दक्षिणास्तेभ्यो वित्तशाठ्यविवर्जितः।
स्वशक्त्या दक्षिणां दद्यादाचार्य्याय क्षमापयेत्†॥
क्रियाहीनं भक्तिहीनं द्रव्यहीनं तथैव च।
मन्त्रहीनं पठेत्पश्चात् व्रतसम्पूर्ण‡हेतवे॥

अनन्त संसारमहासमुद्रे
मग्नं समभ्युद्धर वासुदेव।
अनन्तरूपे विनियोजयस्व
अनन्तरूपाय नमोनमस्ते॥

इत्यनन्तं विसर्ज्याथ ब्राह्मणांश्च तथैव च॥
दीनेभ्यः कृपणेभ्यश्च¶ दद्याच्चैव तथा धनं॥
ततहृष्टैः समस्तैश्च पुत्र सम्बन्धिबान्धवैः।
यथोपपन्नं भोक्तव्यं कृत्वा मानसमव्यये॥
आचर्य्यं च शुचिर्भूत्वा चिन्त्योविष्णुश्च तद्दिने।

---

* आमन्त्रितान् विप्रान् पूर्व्वंस्तु चतुर्दश इति क्वचित् पाठः।

† स्वशक्त्या दद्यादाचार्य्यं प्रणिपत्य क्षमापयेदिति पुस्तकान्तरे पाठः।

‡ सम्पूर्त्ति इति पुस्तकान्तरे पाठः।

¶ दीनान्धकृपणेभ्यश्च इति पुस्तकान्तरे पाठः।

एवं कृते नृपश्रेष्ठ कर्मणाशु जनार्द्दनः।
अनन्तरूपी भगवांस्तुष्टोभवति सर्व्वदा॥
व्रतस्य फलमाप्नोति विष्णुलोके महीयते।

सूत उवाच।

हिरण्यकशिपुं हत्वा देवदेवं जगद्गुरुं।
सुखासीनं तदुत्सङ्गे शान्तकोपं रमापतिं॥
प्रह्लादोज्ञानिनां श्रेष्ठः पालयन् राज्यमुत्तमम्।
एकाकी च तदुत्सङ्गे प्रियं वचनमब्रवीत्॥

प्रह्लाद उवाच।

नमस्ते भगवन् विष्णो नृसिंहरूपिणे नमः।
त्वद्भक्तोऽहं सुरेशैकं त्वां पृच्छामि च तत्त्वतः॥
स्वामिन् त्वयि ममामित्रे भक्तिर्जाता त्वनेकधा।
कथञ्च ते प्रियोजातः कारणं वद मे प्रभो॥

नृसिंह उवाच।

कथयामि महाप्राज्ञ शृणुष्वैकाग्रमानसः।
भक्तेर्यत्कारणं वत्स प्रियत्वस्य च कारणं॥
पुरा काले ह्यभूद्विप्रः किन्तु त्वं नाप्यधीतवान्॥
नाम्ना त्वं वासुदेवोहि वेश्यासक्तमानसः।
यस्मिन्* जन्मनि नैव त्वं चकार सुकृतं कियत्॥
मुक्त्वा तु मद्व्रतं चैकं वेश्यासङ्गतिलालसः।
मद्व्रतस्य प्रभावेन भक्तिर्जाता तवानघ॥

---

* अनन्तर्व्वे ति पुस्तकान्तरे पाठः।

प्रह्लाद उवाच।

श्रीनृसिंहोच्यतां तावत् कस्य पुत्रस्य किं व्रतम्।
वेश्यायां वर्त्तमानेन कथं तच्च कृतं मया॥
येन तद्विष्णुमाहात्म्यं वक्तुमर्हसि साम्प्रतम्॥

नृसिंह उवाच।

पुरावन्तीपुरे ह्यासीत् ब्राह्मणो वेदपारगः।
तस्य नाम सुशर्मेति बहुलोकेषु विश्रुतः॥
नित्यहोमक्रियांचैव विदधाति द्विजोत्तमः।
ब्राह्मक्रियासु नियतः सर्वासु किल तत्परः॥
अग्निष्टोमादिभिर्यज्ञैरिष्टाः सर्वे सुरोत्तमाः।
तेनापि विद्यमानेन कृतश्चो दुष्कृतं कियत्॥
तस्य भार्य्या सुशीलाभूद्विख्याता भुवनत्रये।
पतिव्रता सदाचारा पतिभक्तिपरायणा॥
जज्ञिरे-स्यां सुताः पञ्च तस्माद्विजवरास्तथा।
सदाचाराः सुविद्वांसः पितृभक्तिपरायणाः॥
तेषां मध्ये कनिष्ठस्त्वं वेश्यासङ्गतितत्परः।
मया निषिध्यमानेन सुरापानं त्वया कृतम्।
सुवर्णं चापहृतं तैश्च समं चीर्णमघं बहु॥
विलासिन्या गृहे नित्यं हससे विनिवारितः।

विलासिनी वेश्या।

एकदा तद्गृहे ह्यासी महाकलिस्तया सह।
तेन कलहभावेन भोजनं न त्वया कृतं॥

अस्मानात् मद्व्रतं चक्रे व्रतानामुत्तमं व्रतम्।
तस्यां विहारयोगेन रात्रौ जागरणं कृतं॥
वेश्याथा वल्लभं कश्चित् प्रजातं न त्वया समं।
रात्रौ जागरणं चीर्णं त्यक्तं भोग्यमनेकशः॥
व्रतेनानेन चीर्णेन मोदन्ति दिवि देवताः।
सृष्ट्यर्थेश्च पुरा ब्रह्मा चक्रे ह्येतदनुत्तमं॥
मद्व्रतस्य प्रभावेन निर्मितं स चराचरम्।
ईश्वरेण पुरा चीर्णं बधार्थं त्रिपुरस्य च॥
माहात्म्येन व्रतस्यास्य त्रिपुरस्तु निपातितः।
अन्यैश्च बहुभिर्देवै ऋषिभिश्च पुरानघ॥
राजभिश्च महाप्राज्ञैर्विहितं व्रतमुत्तमम्।
एतद्व्रतप्रभावेन सर्व्वे सिद्धिमुपागताः।
वैश्यापि मत् प्रिया जाता त्रैलोक्ये सुखचारिणी॥
ईदृशं मद्व्रतं वत्स-त्रैलोक्येषु च विश्रुतं।
कलहेन विलासिन्या व्रतमेतदुपस्थितम्॥
प्रह्लाद तेन ते भक्तिर्मयि जाता ह्यनुत्तमा।
धूर्त्तया च विलासिन्या ज्ञात्वा व्रतदिनं मम॥
कलहश्च कृतोयेन मद्व्रतञ्च कृतं भवेत्।
सा वेश्या त्वप्सरा जाता भुक्ता भोगाननेकशः॥
मुक्ता कर्म्म विलासि त्वं प्रह्लाद सुविस्मयः।
कार्य्यार्थं भगवानास्ते मत्सरी च पृथक् तथा॥
विधाय सर्व्वकार्य्याणि शीघ्रं त्वञ्च गमिष्यसि।
य इदं व्रतमावश्यं प्रकरिष्यति मानवः॥

न तेषां पुनरावृत्तिर्मत्तः कल्पशतैरपि।
अपुत्रो लभते पुत्रान् मद्भक्तश्च सुवर्चसा॥
दरिद्रोलभते लक्ष्मीं धनदस्य च यादृशीं
तेजःकामो लभेत्तेजोराज्येषु राज्यमुत्तमं॥
आयुःकामो लभेदायुर्यादृशं च शिवस्य हि।
स्त्रीणां व्रतमिदं साधु पुत्रदं भाग्यदं तथा॥
अवैधव्यकरन्तासां पुत्रशोकविनाशनं।
धनधान्यकरं चैव जातिश्रैष्ठ्यकरं शुभं॥
सार्व्वभौमसुखं तासां दिव्यं सौख्यं भवेत्ततः।
स्त्रियो वा पुरुषाश्चापि कुर्व्वन्ति व्रतमुत्तमम्॥
तेभ्योददाम्यहं सौख्यं भुक्तिमुक्तिसमन्वितं।
बहुनोक्तेन किं वत्स व्रतस्यास्य फलं महत्॥
मद्व्रतस्य फलं वक्तुं नाहं शक्तोन शङ्करः।
ब्रह्मा चतुर्भिर्व्वक्त्रैश्च न लभेन्महिमावधिं॥

प्रह्लाद उवाच।

भगवंस्त्वत्प्रसादेन श्रुतं व्रतमनुत्तमं।
व्रतस्यास्य फलं साधु त्वयि मे भक्तिकारणं॥
स्वामिन् जातिविशेषेण त्वत्तः पापनिकृन्तनं।
अधुना श्रोतुमिच्छामि व्रतस्यास्य विधिं परं॥
कस्मिन् मासे भवेदेतत् कस्मिंश्च वासरे प्रभो।
एतद्विस्तरतोदेव वक्तुमर्हसि साम्प्रतं॥
विधिना येन वै स्वामिन् समग्रफलभुग्भवेत्।
ममोपरि कृपां कृत्वा ब्रूहि त्वं सकलं प्रभो॥

नृसिंह उवाच।

साधु साधु महाभाग व्रतस्यास्य विधिं परं।
सर्वं कथयतो मेऽद्य त्वमेकाग्रमनाः शृणु॥
वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत्।
मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनं॥
वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारकम्।
महागुह्यमिदं श्रेष्ठमानुषैर्भवभीरुभिः।
तेनैव क्रियमाणेन सहस्रद्वादशीफलं॥
जायते मत्सखा वच्मि मानुषाणां महात्मनां।
स्वातीनक्षत्रयोगेन शनिवारेण संयुते॥
सिद्धियोगस्य संयोगे वणिजे करणे तथा।
पुण्यसौभाग्ययोगेन लभ्यते दैवयोगतः॥
सर्वैरेतैस्तु संयुक्तं हत्या कोटिविनाशनम्।
एतदन्यतरे योगे तद्दिनं पापनाशनम्॥
केवले तत्प्रकर्त्तव्यम् मद्दिने व्रतमुत्तमम्।
अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ॥
यथा यथा प्रवृत्तिः स्यात्पातकस्य कलौ युगे।
तथा तथा प्रणश्यन्ति तद्व्रतस्य प्रभावतः॥
मद्व्रतस्य प्रभावेन मतिर्नस्याद्दुरात्मनाम्।
विचार्य्येत्थं प्रकर्त्तव्यं माधवे मासि मद्व्रतं॥
नियमश्च प्रकर्त्तव्यं दन्तधावनपूर्वकं।
श्रीनृसिंहोमहोग्रस्त्वं दयां कृत्वा ममोपरि॥

अद्यप्रभृति विधास्यामि व्रतं निर्विघ्नतां नय ।

इति नियममन्त्रः ।

व्रतस्थेन न कर्त्तव्या सङ्गतिः पापिभिः सह ।
मिथ्यालापोन कर्त्तव्यः समग्रफलकाङ्क्षिभिः ॥
स्त्रीभिर्हतैश्च आलापान् व्रतस्थोनैव कारयेत् ।
स्मर्त्तव्यं मे महारूपं मद्दिने सकले शुभे ॥
ततो मध्याह्नवेलायां नद्यादौ विमले जले ।
गृहेवा देवखाते वा तड़ागे विमले शुभे ॥
वैदिकेन च मन्त्रेण स्नानं कृत्वा विचक्षणः ।
मृत्तिकागोमयेनैव तथा धात्रीफलेन च ॥
तिलैश्च सर्व्वपापघ्नैः स्नानं कृत्वा महात्मभिः ।
परिधाय शुचिर्व्वासो नित्यकर्म्म समाचरेत् ॥
ततोगृहं समागत्य स्मरन् मान्भक्तियोगतः ।
गोमयेन च लिप्याथ कुर्यादष्टदलं शुभं ॥
कलशन्तत्र संस्थाप्य ताम्ररत्नसमन्वितं ।
तस्योपरि न्यसेत्पात्रं तण्डुलैः परिपूरितं ॥
हैमी तत्र च मन्मूर्त्तिः स्थाप्या लक्ष्म्या तथैव च ।
पलेनच तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥
यथा शक्ति तथा कार्या वित्तशाठ्यविवर्जितः ।
पञ्चामृतेन संस्नाप्य पूजनन्तु समाचरेत् ॥
ततोब्राह्मणमाहूय तमाचार्य्यमलोलुपं ।
सदाचारसमायुक्तं शान्तं दान्तं जितेन्द्रियं ॥

तेनैव कारयेत् पूजां दृष्ट्वा शास्त्रानुसारतः ।
आचार्यवचनाद्धीमान् पूजां कुर्य्याद्यथाविधि ।
मण्डपं कारयेत्तत्र पुष्पस्तवकशोभितं ॥
ऋतुकालोद्भवैः पुष्पैः पूजयेद्यतमानसः ।
उपचारैः षोड़शभिर्म्मन्त्रैर्नामभिस्तथा ।
ततः पौराणिकैर्म्मन्त्रैः पूजनीयो यथाविधि ।
चन्दनं शीतलं दिव्यं चन्द्रकुङ्कुममिश्रितं ।
ददामि तव तुष्ट्यर्थं नृसिंह परमेश्वर ॥

इतिचन्दनमन्त्रः ।

कालोद्भवानि पुष्पाणि तुलस्यादीनि वै प्रभो ।
पूजयामि नृसिंहन्त्वां लक्ष्म्या सह नमोऽस्तु ते ॥

पुष्पमन्त्रः ।

कालागरुमयन्धूपं सर्व्वदेवसुवल्लभं ।
करोमि वै महाविष्णो सर्व्वकामसमृद्धये ॥

इति धूपमन्त्रः ।

दीपः पापहरः प्रोक्तस्तमोराशिविनाशनः ।
दीपेन लभ्यते तेजस्तस्माद्दीपं ददामि ते ॥

इति दीपमन्त्रः ।

नैवेद्यं सौख्यदञ्चारु भक्ष्यभोज्यसमन्वितं ।
ददामि ते रमाकान्त सर्व्वपापक्षयं कुरु ॥

इति नवैद्यमन्त्रः।

नृसिंहाच्युत देवेश लक्ष्मीकान्त जगत्पते।
अनेनार्घ्यप्रदानेन सफलाः स्युर्मनोरथाः॥

इत्यर्घ्यमन्त्रः।

पीताम्बर महाबाहो प्रह्लाद भयनाशकृत्।
यथाभूतेनार्चनेन यथोक्तफलदो भव॥

इति प्रार्थनमन्त्रः।

रात्रौ जागरणं कार्य्यं गीतवादित्रनिस्वनैः।
पुराणपठनैर्नृत्यैः श्रोतव्या च कथा शुभा॥
ततः प्रभातसमये स्नानं कृत्वा ह्यतन्द्रितः।
पूर्वोक्तेन विधानेन पूजयेन्मां प्रयत्नतः॥
वैष्णवं तु चरेच्छ्राद्धं मदग्रे स्वस्थमानसः।
ततो दानानि देयानि वक्ष्यमाणानि चानघ॥
पात्रेभ्यस्तु द्विजेभ्यो हि लोकद्वयजिगीषया।
सिंहः स्वर्णमयो देयो मम सन्तोषकारकः॥
गो-भूतिल-हिरण्यानि देयानि च फलैः शुभैः।
शय्या सतूलिका देया सप्तधान्यसमन्विता॥
अन्यानि च यथाशक्त्या देयानि मम तुष्टये।
वित्तशाठ्यं न कुर्व्वीत यथोक्तफलकाङ्क्षया॥
ब्राह्मणान् भोजयेद्भक्त्या तेभ्यो देया च दक्षिणा।
निर्द्धनैरपि कर्त्तव्यं देयं शक्त्यनुसारतः॥
सर्वेषामेव वर्णानामधिकारोऽस्ति मे व्रत।

मद्भक्तैस्तु विशेषेण कर्त्तव्यं मत्परायणैः ॥
मद्वंशे ये नरा जाता ये निष्पत्तिपरायणाः ।
तान् समुद्धर देवेश दुस्तरात् भवसागरात् ॥
पातकार्णवमग्नस्य व्याधिदुःखाम्बुवारिभिः ।
जीवैस्तु परिभूतस्य महादुःखगतस्य मे ॥
करावलम्बनन्देहि शेषशायिन् जगत्पते ।
श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ॥
क्षीराम्बुधिनिवासस्त्वं चक्रपाणिर्जनार्द्दनः ।
व्रतेनानेन देवेश भुक्ति-मुक्ति-प्रदो भव ॥

इति प्रार्थनामन्त्रः ।

एवं प्रार्थ्य ततो देवं विसृज्य च यथाविधि ।
उपहारादिकं सर्वमाचार्य्याय निवेदयेत् ॥
दक्षिणाभिः सुसन्तोष्य ब्राह्मणांस्तु विसर्जयेत् ।
मध्याह्ने तु समायुक्तो भुञ्जीत बन्धुभिर्नरः ॥
यद्इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनं ।
तस्य श्रवणमात्रेण ब्रह्महत्यां व्यपोहति ॥
पवित्रं परमं गुह्यं कीर्त्तयेद्यस्तु मानवः ।
सर्व्वान् कामानवाप्नोति व्रतस्यास्य फलं लभेत् ॥

## इति श्रीनरसिंहपुराणे नरसिंहप्रादुर्भावे नरसिंहचतुर्दशीव्रतम् ।

———000———

( ७ )

83—2

शिव उवाच ।

अथ लिङ्गव्रतान्यत्र शृणुष्वैकेन षण्मुख ।
कार्त्तिकात् सम्यगारभ्य व्रतं वै शंसितव्रतः ॥
कार्त्तिकस्य चतुर्दश्यां शुक्लायां पूजयेच्छिवं ।
महास्नानं प्रकर्त्तव्यं महापूजामथो पुनः ॥
लिङ्गव्रतानां सर्वेषां तथा नक्तेन वर्त्तनं ।
पूजां कृत्वाथ यत्नेन वस्त्रनैवेद्यकादिभिः ।
शालिपिष्टमयं लिङ्गं कुर्याद्रत्निप्रमाणतः ॥

रत्निर्बद्धमुष्टिकरः ।

तिलप्रस्थं सुवर्णस्य लिङ्गस्योपरि विन्यसेत् ।
धूपोवै कुन्दुरुर्देय श्चन्दनश्चागरुस्तथा ॥
शिवरूपाय दातव्यं शिवं--यात्यक्षयङ्गतः ॥

शिवरूपाय विप्राय लिङ्गं दातव्यं ।

मार्गशीर्षे चतुर्दश्यां शुक्लायां वै विशेषतः ।
संपूज्य पूर्ववल्लिङ्गं महास्नानेन तत्वतः ॥
विलिप्य कुङ्कुमेनैव शिवन्तेन प्रपूजयेत् ।
श्वेतं चन्दनलिङ्गन्तु कर्त्तव्यं पूर्वमानतः ॥
सुवर्णं तण्डुलप्रस्थं पृष्ठे सर्पं शिवाग्रतः ।
कर्पूरेण तु धूपन्तु चतुर्दिक्षु प्रकल्पयेत् ।
महावर्त्यादिकं देयं दधिपात्रं शुभाष्टकं ॥

'शुभाष्टकं' मङ्गलाष्टकम् ।

एवं कृत्वा विधानेन लिङ्गायविनिवर्त्तयेत् * ।

---

* लिङ्गं लिङ्गाय निर्व्वपेत् इतिक्वचित् पाठः ।

ईशान रुद्रसंज्ञाय आचार्य्याय प्रकल्पयेत्॥

ईशानोरुद्रः, प्रीयतामिति लिङ्गाय समर्च्चग्राचर्य्याय दद्यात् एवमन्येष्वपि मासेषु जहनीयं।

शिवसायुज्यतां याति व्रतेनानेन षण्मुख।
पौषशुक्लचतुर्द्दश्यां पूर्ववत् पूजयेच्छिवं।
पूजान्ते गुग्गुलशतं शिवस्य परितोषहेत्॥

शतं, पलानां।

पायसं घृतसंमिश्रं सखण्डं प्रस्थसम्मितं॥

प्रस्थं, तण्डुलानां।

नैवेद्यं पुरतोदेयं पताकाः शक्तिसङ्ख्यया।

शक्तयो अष्टौ

ध्वजा तथा पुनश्चैत लिङ्गं वै पालिपिष्टजं।
तिलाढ़कं सुवर्णञ्च लिङ्गं दक्षिणतो न्यसेत्॥
शङ्कराख्यस्य रुद्रस्य व्रतमेतत् समर्पयेत्।
माघशुक्लचतुर्दश्यां शिवं संपूज्य वर्त्तयेत्॥
शाल्योदनाचतं लिङ्गं तिलप्रस्थं सुवर्णकं।
शिवस्य दक्षिणे भागे धारितव्यं प्रयत्नतः॥
मुद्गौदनं सघृतञ्च पूर्वस्यां प्रस्थसंमितं।
अगरुं सिह्लकं चन्द्रं दहेद्धूपं शिवाग्रतः॥
व्रतमेवं विधानेन उग्रमावाह्य निर्वपेत्।
व्रतान्ते तु गुरुं भक्त्या यथाशक्त्या प्रपूजयेत्॥
फल्गुशुक्लचतुर्दश्यां शिवं पूज्य विधानतः।
गुग्गुलं सघृतं धूपं महावर्त्तिचतुष्टयं॥

मोदकानि विचित्राणि गौरी देया घृतप्लुता।
पूर्व्वोक्तेन विधानेन तथा लिङ्गं निवेदयेत्।
शर्वाय च नमः पूज्य त्वाचार्य्यो भूरिदक्षिणः॥
एवं कृत्वा मनुष्येण प्राप्नोति तन्मयङ्क्वचित्।
चैत्रशुक्लत्रयोदश्यां शिवं पूज्य विधानतः॥
भवरुद्राय निर्व्वर्त्य आचार्य्यं पूजयेत्ततः।
एवं कार्य्यं प्रयत्नेन चाक्षयं लोकमिच्छता॥
चतुर्द्दश्यां शुक्लपक्षे वैशाखस्य प्रयत्नतः।
शिवं पूज्य विधानेन महास्नपनपूर्व्वकं॥
विलिप्य कुङ्कुमेनैव चन्दनैश्चर्चयेच्छिवं।
लिङ्गं पिष्टमयं कृत्वा हेमपुष्पविभूषितं॥
तिलप्रस्थं सुवर्णञ्च दक्षिणादिकं विन्यसेत्
महावर्त्तिद्वयं देयं दीपमाल्यं घृतेन तु॥
सघृतं गुग्गुलं दद्यात् पलानान्तु शतद्वयं।
अगुरुं शिह्लकं चन्द्रं प्रत्येकन्तु फलन्दहेत्॥
ततोदमनपुष्पैस्तु शिवं संपूजय भक्तितः।
सुवर्णं तिललिङ्गञ्च भवरुद्राय निर्वपेत्॥
रुद्रसंख्यास्तु गुरवो दक्षितव्याः प्रयत्नतः।
भूदानवस्त्रदानैश्च सुवर्णादि प्रविस्तरैः॥
एतद्व्रतोत्तमंनाम व्रतं संवत्सरं हितं।
एवं यः कुरुते भक्त्या सगच्छेत्परमम्पदं॥
पितरस्तस्य नन्दन्ति रुद्रलोके महीयते।
दिव्यवर्षायुतं स्वाग्रं तदन्ते तु धनेश्वराः॥

5564

आत्मस्थानं पुनस्ते तु शिवे नित्ये लयं ययुः ।
यः करोति मद्भावेन शिववत् स च पूज्यते ॥
ज्यैष्ठे शुक्लचतुर्दश्यां नित्यं स्नात्वा शिवं जपेत् ।
विलिप्य चन्दनेनैव जातीपुष्पैश्च पूजयेत् ॥
कुङ्कुमं लघुचन्द्रश्च धूपं देयं शिवायतः ॥

लघु, अगुरु ।

दीपमाला तु दातव्या घारिका किङ्किणीध्वजं ।
लावणागालकाश्चैव क्षीरिपो घृतसंयुत ॥
खण्डपात्राणि देयानि घृतपात्राणि तद्विदः ।
एवं यः कुरुते वाञ्छन् भोक्तमक्षय्यमैश्वरं ॥
पितॄनुद्धरते सोऽपि दशपूर्वान् दशापरान् ।
आषाढस्य चतुर्दश्यां शुक्लपक्षे विशेषतः ॥
शिवं पूज्य विधानेन महास्नपनपूर्वकं ।
विलिप्य चन्दनैर्देवं प्रपला तु चतुःसमं ॥
चन्द्रं चन्दनकाश्मीरं ग्रन्थिला च शिखिध्वज ।
एवं चतुःसमं नाम अङ्गरागः शिवप्रियः ॥
सस्यकुङ्कुमकर्पूरं लघुवत्पलसंयुतं ।
धूपन्तु परतो दद्यात् नैवेद्यं किरणान् बहून् ॥
किरणान् कर्पूरान् । लिङ्गाख्यास्तत्र एतत् ।
घोरिका लड्डुकाश्चैव घृतपूरं पटत्रिकं ॥
निवेद्य क्षीरपानञ्च स्नेहाद्देवस्य यत्नतः ।
पिष्टलिङ्गं सुवर्णं च पूगपत्रञ्च निर्वपेत् ॥
वितानञ्च पताकाश्च व्यजनं दर्पणं तथा ।

आचार्यं पूजयेत् पश्चाद्धेमवस्त्रवाहनैः॥
एवं यः कुरुते सम्यक् स याति परमं पदं।
पितरस्तस्य मोदन्ते रुद्रलोके समंततः॥
कल्पकोटिसहस्राणि कल्पकोटि शतानि च।
श्रावणस्य चतुर्दश्यां शुक्लपक्षे व्रतं चरेत्॥
नित्यनैमित्तिकं चैव कृत्वा काम्यं समाचरेत्।
स्नानं पूजाजपोध्यानं होमं चैवतु पञ्चमं॥
इति नित्यं समाख्यातामहन्यहनि सन्मुख।
अष्टम्यादिनिमित्तेषु पूजासु द्विगुणा तथा॥
पवित्रारोहणं तद्वन्नित्याङ्गं नियमं स्थितं।
दीक्षाचैव प्रतिष्टा च ग्रहणमयनं तथा॥
षड़शीति सुखाश्चैव निमित्तकमुदाहृतं।
काम्यव्रतानि कार्य्याणि ज्ञेवानि हि तथा परं॥
संपूज्य परमेशानं पूर्ववच्च विलेपनं।
वानरेनुहितं धूपं नैवेद्यं पायसं तथा॥

वानरं सिह्लकम्।

वस्त्रपूतोदकं चन्द्र पानन्देवाय कल्पयेत्।
ताम्बूलपिटिकां जिह्वं सुवर्णञ्च समर्पयेत्॥
व्यजनं पादुकां पट्टं गन्धं धूपकपट्टकं।
नैवेद्यं विधिवत् भक्त्या भीमरुद्राय भक्तितः॥
आचार्य्यपूजैपरतैः कर्त्तव्या शाठ्यवर्जितैः।
अनेन व्रतमुख्येन शिवे यान्ति लयं परं॥
पितृनुद्धरते सोऽपि दशपूर्व्वान् दशापरान्।

